अद्वैतमप्यनुभवामि करस्थबिल्व-
तुल्यं शरीरमहिनिर्ल्वयनीव वीक्षे ॥
एवं च जीवन्नपि प्रतिभाससमानं
निःश्रेयसोऽधिगमनं च मम प्रसिद्धम् ॥ ५५ ॥

अद्वैतमिति । अद्वा साक्षादनुभवतः कदाचिद्भासमान-
मपि द्वैतं न पूर्ववद्भातीत्यत्र निदर्शनमाह । अहिनिर्ल्वयनीवेति।
अहिनिर्मोको हि त्यागात् पूर्वमहिनाऽहमित्येव मतिपन्नस्त्यागा-
नन्तरं तदभिमानरहित एव प्रतीयते, तथा शरीरादिरूपे द्वैते पूर्वव-
दहं ममाभिमानं विहाय मिथ्यैवेदं भातीति पश्यामीत्यर्थः । मि-
थ्यात्वेन निश्चतद्वैतदर्शनानुवृत्तौ फलितमाह—एवं चेति ॥ ५५ ॥

विद्यामहिम्ना मदपकारकं निर्मूलमेवोच्छिन्नमिति तां प्रशंसति—

अद्वैतबाधकमभून् मम यद् द्वितीय-
मद्वैतमस्य बत बाधकमेव जातम् ॥
मोहाद् द्वितीयमपबाधकमस्य विद्या-
सामर्थ्यतोऽद्वयनिबर्हणमद्वितीयम् ॥ ५६ ॥

अद्वैतबाधकमिति । इदानीमपि पूर्ववदेव द्वैतमेवाद्वैतबा-
धकं किं न स्यादित्याशङ्क्य द्वैतस्यालोकमोहबलावष्टम्भेनाद्वैतबाध-
कत्वं दुर्बलत्वादद्वैतस्य तु परमार्थवस्तुत्वगाद्विद्यासामर्थ्यावष्टम्भेन
बलवत्त्वान्नैवमित्याशयेनाह । मोहादिति । अस्य अद्वैतस्य ॥ ५६ ॥

निर्मुक्तमात्मानं दृष्ट्वा पूर्वमनुभूतसंसारं स्मरन् तत्र स्वस्यो-
त्पत्त्याश्चर्यधियं प्रकटयति—

आश्चर्यमद्य मम भाति कथं द्वितीयं
नित्ये निरस्तनिखिलाखिलचित्प्रकाशे ॥
आसीत् पुरेति किमिमाः श्रुतयो न पूर्वं
येन द्वितीयममवत्तिपिरप्रसूतम् ॥ ५७ ॥

आश्चर्यमिति । किमत्राश्चर्यं वस्तुत उक्तरूपे परात्मन्य-
ज्ञानाद् द्वैतस्यानर्थापत्तेरित्याशङ्क्याज्ञाननिवर्तकस्य धीजनने नि-

रपेक्षकारणेषु वेदान्तवाक्येष्वनादिमिद्धेषु ज्ञानाभावादज्ञाना-नुवृत्त्या द्वैतानुवृत्तिनिरासेनाद्भुताश्चर्यमेवेत्याह । किमिमा इति । ५७॥

इदानीं पूर्वं श्रुतिवाक्येषु सत्स्वप्यन्वयव्यतिरेकाभ्यां तत्त्व-बोधाभावे कारणं निश्चित्याज्ञानादि सम्भावयन्नाश्चर्यविधयं वजति ।

त्वत्पादपङ्कजसमाश्रयणं विना मे
सङ्कल्पसन्निव परः पुरुषः पुरासीत् ।
त्वत्पादपद्मयुगलाश्रयणादिदानीं
नासीन्न चास्ति न भविष्यति भेदबुद्धिः ॥५८।

त्वत्पादपङ्कजेति । पूर्वं संसारं निर्वेदपूर्वकं त्वादृशगु-रूपसत्त्वभावात्मत्त्वपि वेदान्तवाक्येषु गुरूपदेशाधीनतत्त्वबोधा-भावादज्ञानाधीनद्वैताभिनिवेशेनाद्वैतं परमार्थं सदप्यसत्कल्पमभूत्, इदानीं तु गुरुप्रसादलब्धतत्त्वबोधेनाद्वैतात्मत्वमेव सदास्ति भ्रा-न्तिमात्रसिद्धं तु द्वैतं कालत्रयेऽप्यसदिति निश्चितमित्यर्थः ॥५८॥

आत्मज्ञानातरस्य छामस्याभावार्चं भावितवतो गुरोस्तद-नुरूपप्रत्युपकाराभावाद्भक्तिपुरःसरं गुरूपासनमेव यावदायुर्मया कार्यम्, तावतापि तत्तोषो भवेदित्यभिमेत्याह—

यस्मात् कृपापरवशो मम दुश्चिकित्स्यं
संसाररोगमपनेतुमसि प्रवृत्तः ॥
त्वत्पादपङ्कजरजः शिरसा दधान-
स्त्वामाशरीरपतनादहमभ्युपासे ॥५९॥

यस्मात्कृपेति ॥ ५९ ॥

साधिकारविषयप्रयोजनां स्वकृतिमुपसंहरन् तस्या मुमुक्षु-भिरुपादेयतां सूचयन् तस्याः सान्वयसंज्ञामाह—

संक्षेपशारीरकमेव मेतत्
कृतं परिव्राजकमुक्तिहेतुः ॥
गुरुप्रसादात् परिलभ्य तत्त्वं
अपीशिरस्तत्त्वनिवेदनाय ॥ ६० ॥

संक्षेपेति ॥ ६० ॥

तां कृतिं गङ्गासाम्येन स्तुवन् तस्या मङ्गलं प्रार्थयते—

अविरलपदपङ्क्तिः पद्मनाभस्य पुण्या
चरणकमलधूलिग्राहिणी भारतीयम् ॥
घनतरमुपघातं श्रेयसः श्रोतृसंघात्
सुरसरिदिव सद्यो मार्ष्टु माङ्गल्यहेतुः ॥६१॥

अविरलेति । नानाशब्दात्मकत्वाद्बहुविधपदविन्यासक्रमवतीत्यर्थः । पद्मनाभस्य चरणकमलयोर्धूलिग्राहिणी श्रोतृसंघात् श्रेयस उपसंघातं मार्ष्टु इत्यन्वयः ॥६१॥

ग्रन्थस्य साम्प्रदायिकत्वं दर्शयितुं गुरोः स्वस्य च नाम निर्दिशन्ग्रन्थोत्पत्तिकालं दर्शयति—

श्रीदेवेश्वरपादपङ्कजरजःसंपर्कपूताशयः
सर्वज्ञात्मगिराङ्कितो मुनिवरः संक्षेपशारीरकम् ॥
चक्रे सज्जनबुद्धिवर्धनमिदं राजन्यवंशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति ॥६२॥

श्रीदेवेश्वरेति ॥६२॥

अन्तेऽपि भगवन्नमस्काररूपं मङ्गलमाचरति—

भुजङ्गमाङ्गशायिने विहङ्गमाङ्गगामिने ॥
तुरङ्गमाङ्गभेदिने नमो रथाङ्गधारिणे ॥६३॥

इति श्रीसर्वज्ञात्ममुनिविरचिते संक्षेपशारीरके फललक्षणं
नाम चतुर्थोऽध्यायः ॥ ४ ॥

भुजङ्गमाङ्गेति ॥ ६३ ॥

इह योऽस्ति विमोहयन्मन परमानन्दघन सनातनः ।
गुणदोषभृदेष एव नस्तृणतुल्यो यदयं स्वय जनः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यमधुसूदनसरस्वतीविरचितायां संक्षेपशारीरकटीकायां चतुर्थोऽध्यायः ॥

समाप्तश्चायं ग्रन्थः । शुभमस्तु सर्वजगताम् ।

---